मस्त्विति॰वान्यम्; तस्यासमवायित्वानुपपत्तेः। न चादृष्टवैगुण्यात् कार्यानुत्पत्ति-शङ्कया क्रियायां न प्रवर्तेतेति वाच्यम्; शक्तिप्रतिबन्धेऽपि तुल्यत्वात्।

न चादृष्टवैगुण्यपक्षे कश्चिद्दहति कश्चिन्नेति न संभवतीति वाच्यम्; अदृष्टस्य विलक्षणत्वात्। यथा शुद्धिपरीक्षायां होमादिजन्यस्यादृष्टस्य फल(ग्नि)-प्रतिबन्धकत्वे सोऽग्निरन्यमपि न दहेत्। पुरुषशक्तिप्रतिबन्धकत्वेऽप्यन्योऽग्निर्न दहेत्। संयोगशक्तिप्रतिबन्धकत्वे यथा दृष्टकार्यप्रतिबन्धः क्वचिद्भवति क्वचिन्न, तथा दृष्टकार्यदाहः क्वचिद्भवति क्वचिन्नेति सम्भवति। अथवा मणिसन्निधाना-ददृष्टं क्वचिदुद्भूतं क्वचिदभिभूतं कल्प्यते। विचित्रत्वाददृष्टगतेः सर्वमुपपद्यते। तस्मादर्थापत्त्यपेक्षा शक्तिकल्पना न सिध्यतीति सिद्धम्।

अनुमानापेक्षया तु स्वाश्रितत्वेनानुमानादग्न्याश्रितातिशयसिद्धिः। विप्रतिपन्नोऽग्निः अजनकदशातो जनकदशायां स्वसमवेतातिशयी जनकत्वात् आत्मवत्।

ननु कारकान्तराण्यजनकदशातो नातिशयितानि। न हि तेषां स्वसमवेता-तिशयो ऽस्ति। अतोऽनैकान्तिको हेतुः। अथ कस्यचिदतिशयात् सर्वाणि सातिशयानीति चेत् तर्ह्यदृष्टस्योद्भवातिशयात् सर्वत्र सातिशयत्वमुपपन्नमिति न शक्तिसिद्धिः।

किञ्च शक्त्युद्भवाभिभवपक्षे शक्तिगतोऽतिशय इति नाग्निसमवेताति-शयानुमानं संभवति। किञ्च शक्तिप्रतिबन्धकेन किं शक्तेर्विनाशो वा क्रियते, उताभिभवः, किं वा धर्मविशेषः। न तावदाद्यः—पुनरुत्पत्त्यसम्भवात्। आश्रय-समानहेतुत्वाच्छक्तेः न कारणान्तराच्छक्त्युत्पत्तिः सम्भवति। अनियतहेतुत्व-प्रसङ्गात्, तेनैव कार्योत्पत्तिप्रसङ्गाच्च। नापि द्वितीयः पुनरुद्भवोत्पत्तौ प्रागुक्तदो-षप्रसङ्गाच्च। किञ्च स चायमभिभवो वह्नेरस्तु किं शक्तिकल्पनया। अथादृष्टस्य दृष्ट एवाभिभव इति चेत्; न। तर्ह्यदृष्टस्यैवाभिभवोऽस्तु। सर्वोत्पत्तिनिमित्तस्यादृष्टस्या-भिभवात्कार्यानुत्पत्तिरस्तु, किं शक्त्या। तथा प्रतिबन्धकसन्निधाने यदा स्थिर-वस्तुशक्तिनाशः तदाग्न्यादीनि सदाभिभूतशक्तीनीति न कार्यं कुर्वन्ति। यदा क्षणिककारणशक्तिनाशस्तदा प्रतिबन्धकापगमेऽपि कार्यं भवति तदाभिभूत-शक्तिरित्युच्यते। नापि तृतीयः, तस्य धर्मस्यानिरूपणात्। उच्यते—शक्ति-

नाशपक्षे गौरवादभिभव एवाश्रीयते। अभिभवोऽप्युक्तविध एवोत्पत्तिपक्षेऽपीति न हानिः ।

ननूक्तमभावकारणोत्पाद्यत्वाच्छक्तेस्तस्य च नष्टत्वादुत्पत्तिरेवानुपपन्नेति; तन्न । शक्तेरुत्पत्तिरेवोद्भव इति पक्षे कारणान्तरादेवोत्पत्तिरस्तु ।

ननूक्तं किं तदुत्पत्तिकारणं तेनैव कार्योत्पत्तिरस्त्विति; तदयुक्तं । प्रतिबन्धकापनयव्यापाराच्छक्त्युत्पत्तिरस्तु तद्व्यापारस्य क्षणिकत्वात् । न तेन कार्योत्पत्तिरुपपद्यते । स्वसमवेतातिशयानुमानान्नादृष्टेनोपपत्तिः समवायोत्पत्तिनाशावेवोद्भवाभिभवौ इति स्वसमवेतातिशयानुमानोपपत्तिः । तस्मादतिशयाख्या शक्तिः सिद्धा ।

किञ्च प्रतिबन्धकस्यापि भावनाशद्वारा कार्यविघातित्वं दृष्टं यथा मुद्गरप्रहारादेः । तस्मात् स्वरूपातिरिक्ता शक्तिः सिद्धा ॥

॥ अनुमानं समाप्तम् ॥

शास्त्रं शब्दोत्थकार्यप्रमितिकरणिकाप्रेरणाधीरपूर्वा
लोके भ्रान्त्यादिशङ्कानिरसनसमये वक्तृबोधानुमानात् ।
पश्चात्तात्पर्यबोधात्सहकृतवचनं बोधयज्ज्ञातमर्थं
सापेक्षत्वान्न मानं नररहिततया भ्रान्तिशङ्का न वेदे ॥

सादृश्यज्ञानजाता सदृशविषयधीः सोपमा सानुमातो
भिन्ना तल्लक्ष्यहानेर्न गुणगतधिया तद्गुणद्रव्यकर्मा ।
जात्यादिर्नैव तद्यन्मितविषयतया नास्ति मानं विशेषे
व्यावृत्तिस्तस्य कार्यं ह्यणुषु निजपृथग्भावसिद्धं न मानम् ॥

सार्थापत्तिः प्रमितिविषये सन्दिहानन्तु दृष्टं
कल्प्याभावे तदपि सदसत्कल्पयेत्कल्पनायाः ।
श्रौतेऽप्यर्थं स हि च घटते शाब्दतापि श्रुताना-
मैदंपर्यादपि च घटते शब्दवृत्तिं विनापि ॥

पूर्वदृष्टविशेषस्य दर्शनाभावतस्तथा ।
अन्यथा च प्रतीतत्वात् सामान्यं संशयं व्रजेत् ॥

## अर्थाध्याहारनिरूपणम्

शाब्दं शब्दान्वितं चेति नियमस्यैव वर्जनात्।
श्रुततात्पर्यतः शाब्दसम्भवात् कल्प्यते न वाक्॥

अत्र पीनत्वानुमितदिवानिषिद्धभोजनस्यान्यथानुपपत्त्या रात्रिसम्बन्ध एव कल्प्यते, न तु रात्रिसम्बन्धशब्दः सम्बन्धिविशेषः तस्यानुपपादकत्वात्। ननु शब्दाभिहितस्य शब्दाभिहितेनैवान्वयदर्शनाच्छब्दाभिहितस्यानुपपत्तिः शब्दाभिहितेनैव शाम्यतीति शब्दापेक्षायां प्राथम्यलाघवाभ्यां शब्द एव कल्प्यते। तत एवार्थप्रतीतिसिद्धेर्नार्थकल्पना। यथा व्युत्पत्तौ कार्यान्वयनियमात्कार्यान्विताभिधानं एवं शाब्दान्वयनियमाच्छाब्दान्वयः स्यात्। गामानयेत्युक्ते बहुषु स्मृतेष्वपि शाब्दानामेवान्वयो दृश्यते। आकाङ्क्षा सन्निधिः योग्यत्वञ्चान्येषामप्यविशिष्टम्। क्वचित्प्रयोगव्यभिचारस्तु कार्यान्वयस्याप्यविशिष्टः, तत्र कार्याध्याहारवच्छाब्दाध्याहारो युक्तः। तस्माच्छब्द एवाध्याह्रियते नार्थ इति चेत्; उच्यते। किमिदं शाब्दत्वम्। शब्देनाभिहितत्वमिति चेत; न। गौणलाक्षणिकयोरनन्वयप्रसङ्गात्।

अथ तत्रापि शब्दस्य तात्पर्यवृत्तिरस्तीति चेत; न। अत्रापि साम्यात्। अत्रापि कस्यचित्कार्यवाचिनः शब्दस्याध्याहृते तात्पर्याङ्गीकारात्। अथ तस्य शब्दस्य [1]वृत्तित्रयाभावान्न तात्पर्यमस्तीति चेत्; न। वेदेऽर्थवादपदानां लोके च विषं भुङ्क्ष्वेत्यादेस्तात्पर्यमात्रस्यैव दर्शनात्। अथ तदेकपरेण बोधितस्यान्वयो दृष्ट इति चेत; न। तत्परशब्दश्रुतशब्दानुमितानां चाभिधेययोरनन्वयदर्शनादध्याहारो न स्यात्। किञ्च सविकल्पकेऽर्थविशेषणतयान्यपरप्रतीतस्यार्थेन सह स्मृतस्या[2]न्यपरत्वं [3]बाधित्वाऽ(ता)र्थपरत्वं परिकल्प्य प्रमेयत्वकल्पनातो वरं श्रुतशब्दस्यैव तात्पर्यकल्पनयान्विताभिधानम्।

ननु बहुषु प्रस्तुतेषु किमिति न सर्वैरन्वयो भवति, तव वा किमिति न सर्वशब्दैः, अनुपपत्त्यभावादिति चेत्तर्हि ममाप्यनुपपत्त्यभावादेव न तदन्विततात्पर्यकल्पना। तस्माच्छब्दकल्पनायां प्रमाणं नास्ति। अनुगतत्वादवगतत्वादुपयोगित्वाच्च कार्यान्वितनियम इत्युक्तम्। प्रकृते तादृशं कारणं नास्तीत्युक्तम्।

1. क. वृत्तितया
2. ख. निष्कृष्यान्यपरत्वं
3. क. बाधितार्थपरत्वं

किञ्च पीनो देवदत्त इत्यत्राभिधाभिधेययोः पर्यवसितत्वादध्याहारप्रसङ्ग एव नास्ति। प्रतिपाद्यभोजनाभावस्य पर्यवसितत्वात् पीनत्वस्य च प्रतिपाद्यत्वान्न तत्राध्याहारशङ्का। तत्र प्रमितानुपपत्तिरेव। अतो नात्राध्याहारसम्भावना।

ऊहे तु यच्छब्दकल्पनं तत्रेदं कारणं-प्रकृतौ मन्त्राम्नानादुपायान्तर-स्मरणस्य निवृत्तत्वाच्छब्देनाभिधानं द्वारतया विवक्षितं, तस्य द्वारस्य विकृतौ सूर्यपदमन्तरेणाभावात् तत्पदोहो युक्तः।

इषेत्वेत्यत्र मन्त्रे स्मरणार्थं तत्पदमेवाध्याह्रियते। तस्मात्सर्वत्र न शब्द एवाध्याह्रियत इति सिद्धम्।

॥ इत्यर्थापत्तिः समाप्ता ॥

## अभाववादः

दृश्ये कुम्भादिभावे परविधवपुषः केवलस्योपलम्भा-
दस्मिन्नास्तीत्यभावव्यवहृतिरखिला भूतलादौ घटादेः।
नैवाज्ञानं प्रमास्मिन्नसति च भवनात्प्रातरेषोऽत्र नासी-
दित्येतन्नास्ति बुद्धेरसदनुभववन्नास्तिबुद्धेरभावात् ॥
नास्तीति व्यवहारस्तु केवलावनिबुद्धिकः।
सिद्धः केवलशब्दार्थः सम्मतः सर्ववादिभिः ॥

अत्र केचिदभावाख्यं प्रमाणमभिदधानास्तद्गोचरं नास्तित्वं अभावापर-पर्यायमाहुः; तदयुक्तं। प्रमेयाभावात्प्रमाणासिद्धेः। तदभावस्तु भूतलादि-भावातिरिक्ताकारायाः बुद्धेरभावात्।

ननु नास्तीति व्यवहारान्यथानुपपत्त्या नास्तीतिबुद्धिरनुमीयत इति चेत्; न। नास्तीति व्यवहारस्य भूतलमात्रादप्युपपत्तेः। ननु भूतलज्ञानं नापि दृश्ये प्रतियोगिनि भूतलज्ञानं नास्तीति व्यवहारहेतुः घटवत्यपि तादृशभूतल-भावात् नास्तीति व्यवहारप्रसङ्गात्। नापि स्मर्यमाणे प्रतियोगिनि अयमिह नासीदिति व्यवहाराभावप्रसङ्गात्। नापि जिघृक्षिते प्रतियोगिनि भूतलज्ञाना-त्प्रेमास्पदे वस्तुनि पुनः पुनर्जिघृक्षिते तदभावव्यवहारापत्तेः।

ननु भूतलादिस्वरूपमुभयविधव्यवहारहेतुः स्वरूपव्यवहारस्य [1]संसृष्टा-भावव्यवहारस्य च तत्र [2]संसृष्टे भूतलादौ [3]संसृष्टव्यवहारोदयेन प्रतिबन्धत्वा-

1. ख. संस्पृष्टा—
2. ख. संस्पृष्टे
3. ख. संस्पृष्ट

तदभावे व्यवहारो नास्तीति नातिप्रसक्तिदोष इति चेत्; मैवं। सामग्र्यां सत्यां कार्यानुत्पत्त्यसंभवात् सामग्रीवैकल्यादेव कार्यानुदय इति वाच्यम्; तत्र नाभावादन्यद्वैकल्यमस्तीति नास्तीति व्यवहारहेतोर्भूतलस्यावैकल्यात् नास्तीति व्यवहारो दुर्वारः। नास्तीति व्यवहारविरोधिघट(ा) भाव एव वैकल्यमिति चेत्; न। कोऽयं विरोधो नाम। न तावत्सहानवस्थानं अभावगर्भत्वात्तस्य। नापि भावाभाववत् परस्परपरिहारात्मकत्वं भूतलघटयोर्वा घटतदभावव्यवहारयोर्वा सम्भवति अन्याभावेऽन्याभावनियमप्रसङ्गात्। तस्माद्भूतलस्वरूपमेवाभावव्यवहारहेतुरिति न सांप्रतम्। अथ संसृष्टादन्यभूतलमभावव्यवहारेतुरिति चेत् किमिदमन्यत्वं नाम। न तावत्स्वरूपं तस्य तादवस्थ्यात्, सर्वदा घटसंसृष्टत्वेऽप्यभावव्यवहारप्रसङ्गात्। अथ संसृष्टत्वे तत्त्वान्यत्वमिति चेत्; न। अभावो भावयोगी वा अन्यः; उच्यते। अभावानङ्गीकारे संसृष्टान्यभूतलत्वं न शक्यं वक्तुम्। अथ भूतलमात्रदर्शने भावव्यवहार इति चेत्; कोऽयं मात्रशब्दार्थः। न तावद्भूतलं घटवत्यपि प्रसङ्गादेव। नापि तदतिरिक्तं नामान्तरेणाभावाङ्गीकारप्रसङ्गात्।

अथ भावातिरिक्तो मात्रशब्दार्थः अभाववादिभिरप्यङ्गीक्रियते चत्वरतलमुपलभ्य देशान्तरमागतः पृच्छ्यते किमस्ति चत्वरे चैत्र इति। एवं पृष्टो वदति चत्वारमात्रमुपलब्धमिति। अथवा पुरुषमात्रं दृष्टं स चैत्रो न वेति तत्र न तावच्चैत्राभावो दृष्टः तदानीं प्रतियोग्यस्मरणात्। नापि भावः तद्वति मात्रशब्दाप्रयोगात्। न च पुरुषसामान्यमर्थः विशेषदर्शने प्रयोगात्। तस्माद्भावातिरिक्तो मात्रशब्दार्थोऽङ्गीकार्यः। स एवाभावव्यवहारहेतुरस्तु; तन्न। मात्रशब्दस्य परिमाणवचनत्वाद्यदा दर्शने चत्वरतलं विषयपरिमाणं सम्भवति तदा तन्मात्रं दृष्टमित्युच्यते। यद्यपि तदानीं प्रतियोग्यस्मरणादवच्छेद्यास्फुरणाद्विषयावच्छेदो न भातः, तथापि प्रश्नानन्तरं जातिजिज्ञासश्चैत्र(ा)स्मरणात्तदनुपलब्धिमवगम्य तदातनचत्वरदर्शने विषयपरिमाणज्ञानान्मात्रशब्दप्रयोगः उपपद्यते। ए (हि) तेन तदेकविषया बुद्धिरभावव्यवहारहेतुरिति तु निरस्तम्। घटवत्यपि प्रसङ्गादेव।

ननु घटसंसृष्टे भूतलैकविषया बुद्धिर्नास्ति उभयविषयत्वात्तद्बुद्धेः; मैवम्। किमेकविषयत्वं बुद्धेः, किमेकत्वस्य विषयभावः, आहोस्वित् द्वितीयादिव्यावृत्तिः। न तावदाद्यः—द्वितीयसन्निधानेऽप्येकत्वानपायात्। न च

सदप्येकत्वं न प्रतीयत इति वाच्यम्; अप्रतीतिकारणाभावात्। नापि द्वितीयः, व्यावृत्तिशब्दार्थानिरूपणात्।

ननु सर्वं हि विशेषणं तव मते स्वभावव्याप्तं नावच्छिन्द्यात् कथमेकत्वं द्वित्वादिकमवच्छिन्द्यात् द्वित्वेऽप्येकत्वस्य भावान्नावच्छेदसम्भवः। उच्यते। एकत्वं हि क्वचित् क्रियायां विशेषणत्वेनोपादानसामर्थ्यात् द्वित्वाद्यवच्छिनत्ति, न पुनः विरोधात् द्वित्वेऽप्येकत्वस्य सम्भवादित्युक्तं। तस्मादेकत्वविषया बुद्धिर्नाभावव्यवहारकारणम्।

ननु भूतलघटनिरूप्यत्वेनोभयविषयायां बुद्धौ भूतलस्य विषयत्वं नास्ति यथाग्नीषोमीये अग्नेर्देवतात्वं नास्तीति युक्तं; मैवं। उभयनिरूप्यायामपि बुद्धौ भूतलस्य विषयत्वं नैव नास्ति। तत्प्रयुक्तमपि कार्यं नैव न भवेत्। न ह्युत्पल-प्रयुक्तं कार्यं नीलोत्पले न भवति। यदुक्तं यथाग्नीषोमीये अग्नेर्देवतात्वं नास्तीति, तत्र तद्धितनिर्देशसामर्थ्याधीने सापेक्षत्वे सामर्थ्याभावादग्नेरितरानपेक्षस्यैव देवतात्वमाग्नेये। तेनाग्नीषोमीयेऽग्नेर्देवतात्वं नास्तीति। एतेनैकाकिभूतलज्ञानं व्यवहारहेतुरिति निरस्तम्। एकाकित्वमसहायत्वं 'एकादाकिनिच्चासहाये' (पा—सू) इति स्मृतेः। तच्चाभावाधीनमित्यभावाङ्गीकारप्रसङ्गः। अथ केवल-भूतलोपलम्भादभावव्यवहार इति चेत्; न। मात्रशब्दार्थवत् केवलशब्दार्था-निरूपणात्।

किञ्च केवलोपलम्भाच्चेद्व्यवहारः सूक्ष्मकण्टकादिजिज्ञासा न घटते। जिज्ञासया विवेकोपलम्भश्चेत्साध्यः स (न) च पूर्वमेव लब्ध इति किं जिज्ञासया। किञ्च केवलोपलम्भश्चेत् अभावः स च सुषुप्तिसमये नष्ट इति पूर्ववत् मृतस्य पित्रादेरुत्थानप्रसङ्गः, अभावनाशस्य भावात्मकत्वात्। तस्माद-भावाख्यं प्रमेयं तत्प्रमाणं चाङ्गीकरणीयमिति।

अत्रोच्यते—दृश्ये प्रतियोगिनि केवलभूतलोपलम्भात् नास्तीति व्यवहारोपपत्तेर्नार्थापत्त्या नास्तीति ज्ञानं कल्प्यम्। किमिदं कैवल्यमिति चेत्; उच्यते। ज्ञेयवैलक्षण्यं ज्ञानवैलक्षण्यबोध्यमिति तद्वैलक्षण्यं प्रती(तिपा)-तावापाद्यते। अस्ति तावत्संसृष्टभूतलोपलम्भाद्भिन्ना बुद्धिः। यद्यपि संसृष्टबुद्ध्यो मिथो भिन्नाः, व्यतिरिक्तभूतलबुद्ध्योऽपि मिथो भिन्नाः, तथापि संसृष्टात्मनैकी-

कृताभ्यः संसृष्टबुद्धिभ्यः इतरा बुद्धयो भिन्नत्वेन परिशेषितत्वेन व्यतिरिक्तत्वे चैकीभूता विलक्षणाश्च सर्वसम्मताश्च नास्तीति व्यवहारहेतवः। न च व्यतिरेकोऽभावादन्यो नास्तीति वाच्यम्; भावाभावयोरपि व्यतिरेकाङ्गीकारात्।

न [1]वाभावो भावसमवायी वा व्यतिरिक्तं वाच्यं घटादेः घटाभावानाञ्च स्वप्रागभावादीनाञ्च व्यतिरेकाभ्युपगमात्। न ह्यभावे भावान्तरयोगोऽस्ति। तथा घटाद्यभावे पटाद्यभावः, पटाद्यभावे घटाद्यभावः,प्रध्वंसे प्रागभावः, तत्र प्रध्वंसाभाव आपद्येत। तच्चानुपपन्नम्। तस्मात्स्वरूपत एव संसृष्टबुद्धिभिन्ना(र्ना) भूतलबुद्धिः व्यवहारहेतुः। बुद्धिवैलक्षण्यञ्च बोध्यवैलक्षण्यायत्तमिति भूतलमपि विलक्षणं, तदेव केवलभूतलमेकाकि। तन्मात्रे च यद्युभयविषयत्वे एकमस्ति तथापि नैकस्यावच्छेदकत्वं। अवच्छेदश्च नाभावः अयोगव्यवच्छेदाभावासंभवात्।

तस्मात्केवलभूतलमेव नास्तित्वम्। अथ यदुक्तं केवलोपलम्भाभावे मृतस्योत्थानप्रसङ्ग इति; तन्न। उपलम्भोऽभिव्यक्तिव्यवहारहेतुः। तदभावे व्यवहार एव न भवति, न पुनरस्तित्वप्रसङ्गः। किञ्चायं केवलोपलम्भः त्वयाप्यङ्गीकार्यः आश्रयज्ञानस्याप्यभावावगतिकारणत्वात्। भूतलज्ञानस्य कारणत्वे घटवत्यप्यभावज्ञानोदयप्रसङ्गः। अथाश्रयज्ञानवद् दृश्यानुपलब्धेरपि कारणत्वात् घटवति तदभावात् नाभावज्ञानमिति चेत्; न। अनुपलब्धेरकारणत्वात्। तथाहि— न तावज्ज्ञायमानतया कारणमनवस्थाप्रसङ्गात, नापि सत्तया चत्वरे प्रातरदृष्टः पुनर्मध्याह्नसमयेऽनुभूयमानः प्रातरयमिह नासीदिति प्रत्ययो न स्यात्। उपलम्भेनानुपलम्भस्य नष्टत्वात्। प्रातःकालाभावात्तत्कालीनोऽप्य[2]नुपलम्भोऽतीत एव। न हीदानीमविद्यमानं प्रातःकालीनं च रूपमीक्षते। अथ तत्कालीनचैत्रस्मरणाभावोऽभावज्ञानं जनयतीति चेत; न। सायंकाले पुनरागतस्य स्मरणाभावात्। भावेऽपि प्रातरभावज्ञानदर्शनात्। अथ प्रातरुत्पत्त्यर्हज्ञानाभावोऽनुमत इति चेत्; न। तस्य कालत्रयायोगिनः तदर्हत्वासम्भवात्।

अथ मध्याह्नविषयज्ञानाभावे तद्व्यक्तिप्रागभावनाशेऽपि प्रातःकालविषयज्ञानव्यक्त्यभावो नास्तीति चेत्; तन्न। योऽयमिदानीमभावोऽनुवर्तते स चात्यन्ताभाव एव तज्ज्ञानस्य देशान्तरे कालान्तरेऽप्यभावात्। स च नित्य इत्यनु-

---

1. क. भावोऽसमवायी 2. क. कालीनोऽनुप—

भूयमानेऽपि चैत्रे किमित्यभावज्ञानं न जनयेत्। अथ समस्तज्ञानानामनुदयेऽभावज्ञानमिति चेत्; न। यदानुपलम्भः सन् न तदा भावज्ञानं, यदा भावज्ञानं न तदानुपलम्भ इति न सत्तया कारणम्।

ननु घटो नास्तीत्यत्रापि सदानुत्पत्स्यमानज्ञानाभावः कारणमिति चेत्; न। तज्ज्ञानं सर्वदा वस्तु न गृह्णातीति तदभावः सनातन इति घटोपलम्भेऽप्यभावज्ञानं जनयेत्।

अथैवं मतं तुल्योपलम्भयोग्ययोरन्यतरोपलम्भस्यान्यतरविषयत्वमनुपलम्भः, स चाभावज्ञानहेतुः। तथैव मध्याह्नगतचैत्रचत्वरस्य प्रातर्वर्तिचैत्रेण तुल्योपलम्भयोग्यत्वं नास्तीति तच्चत्वरस्मरणे(णि) प्रातर्गतचत्वरस्य प्रातर्वर्तिचैत्रेण तुल्योपलम्भयोग्यत्वमस्तीति तच्चत्वरस्मरणोपलम्भस्य चैत्राविषयत्वमभावज्ञानहेतुरिति चेत्; न। प्राचीनदोषानतिक्रमात्। यदिदमितराविषयत्वं तदत्यन्तासतो विषयत्वस्याभाव इति सदातनत्वाच्चैत्रोपलम्भेऽप्यभावज्ञानं स्यात्। क्वचित्कदाचित्सतः प्रागभावः प्रध्वंसो वा प्रतिबन्धकस्य कारणमिति युक्तं प्रतिबन्धकाभावस्य कारणत्वं तन्मते। तस्मात् सिद्धं केवलोपलम्भस्योभयसिद्धत्वं अनुपलम्भस्याकारणत्वात्।

किञ्च तुल्योपलम्भयोग्ययोरन्योपलम्भोऽन्यतरस्य दृश्यत्वम्। स चोपलम्भो नास्ति अन्यतरशब्दार्थाभावात्। तस्मात् सिद्धं दृश्ये प्रतियोगिनि केवलभूतलोपलम्भो नास्तीति व्यवहारहेतुरिति।

नन्वभावाभावे मुद्गरादिभिः किं क्रियते; उच्यते। केवलावस्था क्रियते। घटागमेन सैवावस्थाऽपनीयते। सा च सर्वसम्मतेत्युक्तं। दृश्यत्वं च सर्वसम्मतं। तत्सिद्ध्यर्था सूक्ष्मकण्टकादिजिज्ञासा। तस्मात्प्रमेयाभावात् प्रमाणाभाव इति सिद्धम्॥

॥ इत्यभाववादः समाप्तः ॥

## ॥ ईश्वरवादः ॥

कार्यं सकर्तृकं चास्तु [1]कर्ता लङ्कृतिकारकः।
कृतिश्चेन्मतिपूर्वा स्यान्मतिः स्याद्देहपूर्विका॥

1. ख. कर्ता च कृतकारकः.

अत्र केचित्—श्रुतिविलसन्तमीश्वरमनुमानेन साधयन्ति, विमतिपदं क्षित्यादिकं सकर्तृकं कार्यत्वात् यदेवं तदेवं यथा घट इति। तदयुक्तं। सिद्ध-साधनत्वात् जीवानामेव कर्तृत्वोपपत्तेः।

ननु च ज्ञानचिकीर्षाप्रयत्नाश्रयत्वं कर्तृत्वं, तच्च जीवानां न सम्भवति क्षित्याद्युपादानानभिज्ञत्वात्तेषाम्। नन्वात्मन्येव ज्ञानचिकीर्षाप्रयत्नपूर्वकत्व-व्याप्तिः कार्यस्यैवावसेया तत्रैव तेषां प्रत्यक्षत्वात्। तत्र च यदा घटादिकार्यस्य ज्ञानादिपूर्वकत्वमवसीयते तदैव ज्ञानचिकीर्षादेरतत्पूर्वकत्वदर्शनात न व्याप्ति-ग्रहः सम्भवतीति चेत्; मैवं। तदभावनिश्चयात्। बाह्यकार्ये ज्ञानादिपूर्वकत्वस्य बहुशो दर्शनाज्ज्ञानादिष्वपि ज्ञानादिपूर्वकत्वमनुमीयते। तस्मान्नास्ति व्यभिचारः। नायं हेतुरसिद्धः सावयवत्वादिना कार्यत्वसिद्धेर्निश्चितपक्षवृत्तित्वात्। नापि विरुद्धः पक्षविपक्षमात्रवृत्तित्वाभावात्। नाप्यनैकान्तिकः पक्षत्र-यवृत्त्यभावात्। नाप्यसाधारणः पक्षमात्रवृत्तित्वाभावात्।

ननु विशेषविरुद्धो हेतुः, तथाहि—कर्तृत्वस्य शरीरव्याप्तेस्तत्साधने योग्यानुपलम्भबाधादशरीरव्याप्त्यभावान्निर्विशेषसामान्यायोगाच्च विशेषविरुद्ध-तेति चेत्; न। विशेषस्य व्याप्त्यभावात्।

यदि कार्यत्वं शरीरकर्तृव्याप्तं तर्ह्यत्रानुमापयेत्। अथानुपलम्भबाधित-त्वान्नानुमेति चेत्; न तर्हि व्याप्तिः शरीरत्वस्य। अथ शरीरबाधात् कर्तृत्व-स्यापि बाध इति चेत्; न। अन्यबाधेऽन्यबाधानुपपत्तेः। अथ विशेषबाधात्सा-मान्यस्यापि बाधः इति चेत्; न। विशेषान्तरस्यापि सम्भवात्। व्याप्तिस्तस्य नास्तीति चेत्; न। विशेषस्य व्याप्त्यनेपक्षत्वादपर्यवसानलभ्यत्वात्तस्य। अथ व्यापकविशेषनिवृत्तौ सामान्यं निवर्तत इति चेत्; न। विशेषस्य सामान्य-व्यापकत्वाभावात्।

अथान्वयव्यतिरेकाभ्यां ज्ञानादीनां शरीरहेतुत्वात्तदभावे ज्ञानादिकमेव न भवतीति चेत्; न। कारणाभावे ज्ञानादेः कार्यत्वमेव निवर्तते न स्वरूपम्। न हि पार्थिवपरमाणुषु रूपकारणं निवर्तमानं रूपमपि निवर्तयति।

अथ ज्ञानस्य क्षणिकस्वभावत्वान्नित्यत्वे ज्ञानमेव तन्न स्यादिति चेत्; न। ज्ञानादेः क्षणिकस्वभावत्वासिद्धेः। यथाऽनित्यतया दृष्टस्य संयोगस्य विभु-

विषयत्वे नित्यत्वेऽपि न हानिस्तद्वादिनां यथा वा स्पर्शवत्स्वभावस्य मूर्तत्वस्य मनसि स्पर्शाभावेऽपि न हानिरेवं शरीराभावे कारणाभावाज्ज्ञानादेर्नित्यत्वेऽपि न विरोधः कस्यचित् ।

नन्वेवं तर्हि ज्ञानचिकीर्षयोः प्रयत्नोत्पत्त्यर्थत्वात् तस्य च नित्यत्वादलं ज्ञानचिकीर्षाभ्यामिति चेत्; न। न हि प्रयोजनार्थं पदार्थस्वीकारः । अपि तु एकव्याप्तियुक्तेषु बहुषु यावतां विरोधस्तावतां परित्यागः, यावतामविरोधस्तावतां स्वीकारः। यथेदं रजतमित्यत्र रजतांशबाधेऽपीदमंशस्य सत्यता, यथा वा प्राकृताङ्गानामबाधितानां विकृतावनुष्ठानमेवमत्राप्यबाधितानामनुमानम् । तस्मान्न विशेषविरोधोऽनुमानस्येति सिद्धम् ।

नापि सोपाधिकत्वम्, उपाधेरदर्शनात्। न च गृहादिष्वनुस्यूतः क्षित्यादिभ्यो व्यावृत्तो धर्मोऽस्ति येन सोपाधित्वं भवेत्। न च शरीरजन्यत्वमुपाधिः व्यर्थविशेषणत्वात्। जन्यत्वमेव कर्तृमत्त्वे हेतुः न शरीरजन्यत्वम्। यथादृष्टत्वान्न व्यर्थवि(द्वि)शेषणमिति चेत, न; जन्यत्वेन व्याप्तिसिद्धौ शरीरजन्यत्वगौरवाश्रयणस्यायुक्तत्वात्। अथ येन विशेषेण पर्वतादिषु दृष्टेषु न शरीरकर्तृत्वानुमानं येन च गृहा(गवादि)षु तत्कर्तृत्वानुमानं स विशेष उपाधिरिति चेत्; न। एकरूपस्य तादृशोपाधेरनिरूपणात्। यद्यपि तेषु शरीरयोग्यत्वमस्ति तथापि तच्छरीरकर्तृत्वे हेतुर्न तु तत्कर्तृत्व उपाधिः व्यर्थविशेषणत्वप्रसङ्गात्। तस्मात्सोपाधिकमपि नास्ति। अथ शक्यकारणत्वमुपाधिरिति चेत्; न। साधनव्यापकत्वात्। तस्मान्न सोपाधित्वम् ।

किञ्च सकलपक्षानुगतिमात्रेणोपाधित्वे सपक्षानुगतविशेषासंभवेन च विशेषविरोधे सकलादृष्टस्वलक्षणानुमानं चक्षुरादिविषयं भज्येत। अथ यद्यत्कार्यं तत्तत्प्रत्यक्षयोग्यकारणमिति विशेषव्याप्तावपि कारणाभावे कार्यस्यानुगतत्वं हीयत इति विपक्षे बाधकतर्केण विशेषांशं हित्वा सामान्येन व्याप्तिराश्रीयते कार्यं कारणवदिति। अतो रूपादिदर्शनात् कार्येण चक्षुरादिदर्शनं नानुपपन्नमिति चेत्; न। यथा विपक्षे बाधकेन विशेषस्य व्याप्तिहानमुपाधित्वहानं च तथा प्रत्यक्षादिबाधाद्विशेषांशस्य व्याप्तिहानमुचितं विरोधाधीनत्वात् बाधकस्येत्युक्तम्। तस्माच्छरीरत्वविशेषबाधेऽपि तत्कर्तृमत्त्वस्याविरोध इति सिद्धम् ।

न च रागद्वेषादीनामविरोधाद्व्याप्त्यविशेषाच्चानुमानप्रसङ्ग इति वाच्यं; सकलजगन्निर्माणनैपुणशालिनः परमेश्वरस्य रागद्वेषकार्याभावात्। न च प्रयोजनाभावादकर्तृकत्वं वाच्यम्; अवाप्तसमस्तकामस्यापि लीलाप्रयोजनसंभवात्।

न च प्रत्यनुमानबाधः क्षित्याद्यकर्तृकं शरीराजन्यत्वाद्व्योमवदिति सम्भवति व्योमादेरकर्तृकस्याजन्यत्वप्रयुक्तत्वेन प्रत्यनुमानस्य दुष्टत्वात्। न च क्षित्याद्यसर्वज्ञकर्तृकं वस्तुत्वाद्व्योमवदिति वाच्यम्, अकर्तृत्वप्रयुक्तव्याप्त्युपजीवित्वेनाप्रयोजकत्वात्, पक्षस्याप्रसिद्धविशेषणत्वाच्च। न चाप्रसिद्धस्यापि विशेषणस्य निषेधः सम्भवति यथा शशविषाणनिषेध इति वाच्यम्; न क्वचिदप्रसिद्धस्य निषेधः सामग्र्यभावात् शशविषाणं नास्तीत्यत्रापि प्रसिद्धविषाणस्यैव शशसंसर्गो निषिध्यते तस्यैव दृश्यत्वात् प्रतीतत्वाच्च। मिथ्याप्रतीतिरपि संसर्गस्य सत एव न पुनरत्यन्तासतो धर्मिणः। न च तथाविधसंसर्गनिषेधादत्यन्ताभावः इह घटो नास्तीत्यत्रापि साम्यात्। नन्वप्रतीतसंसर्गनिषेधवत् सर्वत्राप्रतीतस्यापि निषेधः सम्भवतीति चेत्, न; सामान्येन प्रसक्तविषयत्वान्निषेधस्य। तस्मादप्रसिद्धविशेषणत्वं सिद्धम्। तस्मादनुमानादीश्वरः सिद्धः।

अत्रोच्यते। क्षित्यादिकार्ये क्षेत्रज्ञानामेव कर्तृत्वोपपत्तेः सिद्धसाध्यता। न च ज्ञानचिकीर्षाश्रयत्वं कर्तृत्वम्, किन्तु कृत्याश्रयत्वमात्रं तावन्मात्रे लोके कर्तृनिर्देशात्। बुद्ध्यभावेऽपि प्रयत्नभावे कर्दमापा[करण]स्वेदप्राणवृत्तिशरीरधारणादिदर्शनात्, ज्ञानचिकीर्षयोर्भावेऽपि प्रयत्नाभावे कार्यादर्शनाच्च। ज्ञानचिकीर्षयोः कृतिसंपादनार्थत्वाच्च तत्कृत्याश्रयत्वमेव कर्तृत्वम्। अत एव मतिपूर्वामतिपूर्वकत्वे प्रायश्चित्तादिभेदः। ईदृशं च कर्तृत्वं जीवानामपि सम्भवति। अथ क्वचिज्ज्ञानचिकीर्षापूर्वकत्वदर्शनात् सर्वत्र विशिष्टकर्तृत्वमनुमीयत इति चेत्; न। तर्हि शरीरोपहिताश्रयज्ञानादिपूर्वकत्वदर्शनात्तथाविधकर्तृत्वमनुमीयते। अथानुपलब्धिविरोधान्न शरीरानुमानमिति चेत्; न। ज्ञानेच्छयोरप्यनुपलम्भस्य तुल्यत्वात्। इयमेव हि नित्यानुमेयानां क्रियाशक्त्यादीनां परागतज्ञानादीनां चानुपलब्धिः येयं कार्यकारणयोरप्यनुपलब्धिः। इतरथा पृथिव्यादीनामपि पदार्थत्वात् ज्ञानं चक्षुरादि चानुमीयेत।

अपि च ज्ञानचिकीर्षयोः प्रयत्नद्वारा कार्यहेतुत्वात्प्रयत्नस्य च नित्यत्वे तयोः कार्यानुपलम्भः सिद्ध एव। तस्माज्जीवानां प्रयत्नसंपादितादृष्टैरेव परमाणुषु क्रियोत्पत्त्या क्षित्यादिकार्यसिद्धिः। स्वर्गकामपदवृत्तेस्तत्साधनविधानाच्च निरतिशयसुखसद्भावस्तदनुगुणदेहदेशसिद्धिश्चावगम्यते। तत्र च वेद एव प्रमाणम्। तथा "ब्रह्मविदाप्नोतिपरम्" इत्युक्त्वानन्तरं "सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते" त्यादिफलश्रवणात्, "ब्रह्मणः सायुज्यं सलोकतां यन्ती"-त्यादिश्रवणाच्च सत्यज्ञानानन्दलक्षणः सर्वज्ञः सर्वकर्तेश्वरः, तेन सह सर्वकामावाप्तिर्मोक्षः इति गम्यते। तत्र चोपादानसहितो वेदः प्रमाणमिति वेदादीश्वरसिद्धिरिति चेत्; अस्त्वेवमीश्वरसिद्धिः नो हानिः। अभ्युपगम्यत एव वैदिकेश्वरः। तस्मात् सिद्धोऽवैदिकेश्वरनिरासः।

॥ **ईश्वरवादः समाप्तः** ॥

## ॥ कर्मैके तत्र दर्शनात् ॥

परत्वमपरत्वं च कार्यमागन्तुहेतुजम्।
विना दिक्कालयोर्योगमन्यथा नोपपद्यते॥

ननु कालः प्रत्यक्षः अमनस्त्वे सति विभुत्वात् आत्मवत् इत्यनुमानात् प्रत्यक्षत्वं सिद्धं, उत्तरत्राधुनेति दिक्कालप्रत्यययोरपरोक्षत्वाच्च। न च विशेषगुणशून्यद्रव्यत्वात् मनोवदिति प्रत्यनुमानबाध्यत्वमनुमानस्य सम्भवति, मनस्सन्निकर्षहीनत्वप्रयुक्तत्वात् मनसोऽप्रत्यक्षत्वस्य। किञ्च प्रत्यक्षत्वाभावे तत्सिद्ध्यन्यथानुपपत्तिसमुत्थार्थापत्तिबाधितान्यप्रत्यक्षत्वानुमानानि अरूपद्रव्यत्वादीनि। परत्वापरत्वे सूर्यपरिवृत्त्यादिभिरुपपन्ने न दिक्कालसंयोगमपेक्षेते तस्मात् दिक्कालौ प्रत्यक्षौ। अत्रोच्यते। अरूपिद्रव्यत्वादस्पर्शद्रव्यत्वाच्च न चाक्षुषत्वं, नापि स्पार्शनत्वं विशेषगुणसहकारि चेन्द्रियं गृह्णातीति शब्दगुणत्वपरीक्षायां वक्ष्यते। न चाप्रत्यक्षत्वे स्वरूपासिद्धिप्रसङ्गः, परत्वमपरत्वं च कार्यं कारणमनुमापयदन्यस्यासंभवात् दिक्कालसंयोगमेव कल्पयति।

न च सूर्यपरिवृत्त्यादिभिरुपपत्तिः, तेषामप्रत्यासन्नत्वात्। प्रत्यासन्नस्यैवासमवायिन उचितत्वात् अन्यस्य प्रत्यासन्नस्याभावात् सूर्यपरिवृत्त्याद्युपहितदिक्कालसंयोग एव कल्प्यते। न चाप्रत्यासन्नस्यापि स्वसामर्थ्यादेव हेतुत्वं वाच्यम्;

सामर्थ्यस्य व्यवस्थितत्वात्। तस्मात् दिङ्निबन्धनपरापरयोर्युवस्थविरयोः परापरव्यतिकरदर्शनात्तन्निमित्तदिक्कालसंयोगः कल्प्यते। एवं चिरक्षिप्रादिप्रत्ययैरपि कालानुमानं वेदितव्यम्। न चात्माकाशाभ्यां तदुपपत्तेर्न द्रव्यान्तरानुमेति वाच्यम्; प्रत्यक्षत्वेऽपि साम्यात्। आकारान्तरस्फुरणांशस्याप्युपाधित एवोपपत्तेर्विमतबोधनाशक्तेश्च विलक्षणकार्यावगतानामन्योन्यात्मत्वे प्रमाणाभावाद्विशेषगुणयोगिनां तत्कार्यभेददर्शनाच्च भेदसिद्धिः।

किञ्च पूर्वापरदक्षिणोत्तरादिषु प्रत्ययेषु विशेष(गु)णत्वेन दिक्कालयोरवगतेः आकाशस्य शब्दगुणत्वेन तद्व्यतिरिक्तदिक्कालसिद्धिः। प्रधानपदस्मृतेषु बहुषु कस्यचिदेवान्वयदर्शनान्न तावन्मात्रमन्वयकारणम्।

## ॥ शब्दशक्तिवादः ॥

अथावापोद्धाराभ्यां यत्पदप्रयोगे यदर्थोऽन्वयबोधकः तत्पदप्रयोगे सोऽर्थो अन्वयबोधक इति चेत्, न; किं पदसन्निधिर्वा विशेषः अभिधानं वा उभयथापि शक्तिकल्पना पदस्य दुर्वारा। अथ शब्दतात्पर्यविषयोऽर्थोऽन्वयबोधकः इति चेत्; न। शब्दसहकृतस्यार्थस्य कारणत्वे शब्दशक्तिर्दुर्वारा। तस्मात् पदार्थवादिपक्षे शक्तिगौरवात्पदशक्तिरेकैव कल्प्या प्राथम्यादपि[1] च पदशक्तिरेव कल्प्या। तथा हि व्युत्पत्तिकाले गवान्वितानयनबोधस्य शब्दानन्तर्यात् शब्दहेतुत्वाच्छब्दशक्तिरवसिता। न चैवं वाक्यस्य वाचकत्वप्रसङ्गः पदावापे पदोद्धारे चान्वितपदार्थावापोद्धारदर्शनात् अवयवद्वारा वाक्यस्य बोधकत्वं प्रथमावगतं निश्चीयते। अथ प्राथम्यन्यायादपि बलीयसान्तरङ्गन्यायेन पदार्थानामेव शक्तिः कल्पनीयेति चेत्; मैवम्। अन्तरङ्गमपि यदा स्वकार्ये बहिरङ्गमपेक्षते तदा बहिरङ्गमपि मुख्यं बलीयः। अत्र तु पदार्थाः स्वकार्याय शब्दबोधितत्वमपेक्षन्ते तच्छब्दस्पर्शस्यावश्यंभावित्वात्प्राथम्यं, तस्यैव शक्तिरस्तु। शब्दस्य पदार्थस्मरणोपक्षीणत्वात्पदार्थानामप्याकाङ्क्षादिपरामर्शोपक्षीणत्वमविशिष्टं। पदशक्तिपक्षे लाघवञ्चास्तीत्युक्तं। तात्पर्योपगमादपि पदानामेव शक्तिः। तात्पर्यं च तत्प्रतिपत्तिशेषत्वाद्यथा पदानां कल्प्यते तथा शक्तिरपि पदानामेव कल्प्यताम्।

ननु पदार्थस्मृतिद्वारापि तात्पर्यमुपपद्यते यथा काष्ठानां ज्वालाद्वारा पाकशेषत्वमिति चेत्; उच्यते। यथा ज्वालामात्रस्य हेतुत्वं न तथा पदार्थस्मृ-

---

1, ख. प्राथम्यादपि पद—

तिमात्रस्य हेतुत्वम्। शब्दविशेषितस्मृतेर्हेतुत्वाच्छब्दस्यापि हेतुत्वं दुर्वारम्। न च तस्याः स्मृतेः कारणान्तरमस्ति येन शब्द उपलक्षणं स्यात्। तस्मात् शब्दस्य शक्तिरास्थेयेति सिद्धम्।

यत्त्वभिहितेनान्विताभिधान इतरेतराश्रयत्वं स्मृतेनातिप्रसङ्गः इति ; नैवम्। पदस्मृतेन पदार्थस्मृतेन वाध्याहृतेन वा तात्पर्योपेतेन पदार्थेनान्विताभिधानान्न दोषः। यत्त्वध्याहृते शक्तिमन्तरेण तात्पर्यं न निर्वहतीति; तदयुक्तं। अनन्यथासिद्धकार्यादेव हि शक्तिकल्पना। अत्रोपपादकत्वेनान्यतो बुद्धिस्थेऽध्याहार्ये तदन्वयांश एव शक्तिः। यथा क्रियाक्षेपावगते कर्तरि संख्यायामेव शक्तिः। तात्पर्यस्य विशिष्टविषयत्वाच्छाब्दत्वमप्युपपन्नम्। तस्मात्पदैरेवान्विताभिधानम्।

यत्तु मतान्तरं पदैरेवान्वितावस्था लक्ष्यत इति ; तदयुक्तम् अन्वयविशेषप्रमापकाभावात्।

अथाकाङ्क्षादिवशेनान्वयविशेषसिद्धिरिति चेत्; न। यद्यप्यस्ति विशेषावगतिः तथाप्यन्वयविशेषप्रमितिशक्ति[1]योगिताभावान्न विशेषनिश्चयः सम्भवति। न च तात्पर्यमात्राद्विशेषप्रतीतिः सम्भवति। तस्मादन्वयविशेषप्रमितित्वसिद्ध्यर्थमवश्यं शक्तिरङ्गीकर्तव्या। सा च पदानामेवेत्युक्तम्।

किञ्च प्रसिद्धलक्षणालक्षणाभावादपि न वाक्यार्थलक्षणा संभवति वाच्यस्य वाक्यार्थे सम्बन्धानुपपत्त्या तत्सम्बन्धोपस्थितस्य वाक्यार्थेऽन्वयालक्षणा न पुनरनुपपत्त्या सम्बन्धगुणो भवति।

न चाप्रत्यक्षयोग्याश्रयः प्रत्यक्षो गुणोऽस्ति। नापीन्द्रियं स्वसमवेतगुणग्राहकं दृष्टम्। नापि गुणः संयुक्तसमवायादृते प्रत्यक्षः। न चेन्द्रियाणां विशेषगुणग्राहकत्वव्याप्तिर्दृष्टेति वाच्यम्। अनित्यसमवायविशेषगुणग्राहकत्वस्यापि प्रसङ्गात्।

नाप्यस्य पारतन्त्र्यकल्पना, न चाप्यश्रयकल्पना, न चाकाश आश्रयः वस्तुत्वाद्घटवदित्यनुमानबाधात्तस्माच्छब्दो द्रव्यम् ; अत्रोच्यते। श्रोत्रं विशेषगुणग्राहकमिन्द्रियत्वाच्चक्षुर्वत्।

---

1. ख, योगिनोऽभावात्

न चानित्यगुणग्राहकत्वदर्शनाद्विशेषविरोधः नित्यग्राहकत्वेऽप्यविरोधात्। यत्र यद्विशेषं विना विशेषान्तरेण साध्यानिर्वाहः तत्रैव तद्विशेषस्य व्यापकत्व साध्यव्यापकविशेषसाधनाक्षमो हेतुर्विशेषविरुद्धो भवति। इतरथातिप्रसङ्गात्।

किञ्च विशेषगुणं गृह्णदेवेन्द्रियं द्रव्यं गृह्णाति नान्यथा यत्र विशेषगुणाभिभवः यत्र वा विशेषगुणो नास्ति तस्योभयस्यापि प्रत्यक्षत्वादर्शनात्। गुणोद्भवोऽपि द्रव्यप्रत्यक्षत्वे हेतुरिति निश्चीयते। अत एव मनसश्चक्षुषो दिवा चन्द्रिकायाश्चादर्शनमुपपद्यते। इतरथा तत्र गुणाभिभववत् द्रव्याभिभवोऽपि कल्प्येत। क्वचिद् द्रव्याभिभवे क्वचिद्गुणाभिभवे च परगतमपि गुणं विशेषगुणत्वेन गृह्णन्नेवात्मा द्रव्यं गृह्णातीति न शब्दस्य द्रव्यत्वे प्रत्यक्षता घटते। तेन चन्द्रिकायां रक्तपटस्य कृष्णत्वेन ग्रहणमुपपद्यते।

यत्तु साक्षादक्षसम्बन्धादिति तत् द्रव्यत्वगुणत्वयोरन्यतरत्वनिश्चयात् प्रागसिद्धमेव।

ननु पारिशेष्यादन्यतरनिश्चये श्रोत्राकाशेन संयोगसमवायान्यतरनिश्चयात्सिद्धत्वमिति चेत्; न। प्राग्गुणत्वाच्छ्रोत्राकाशासिद्धेः। न चाकाशः प्रत्यक्षः गुणग्रहणसामग्र्यभावात्।

न तावच्छ्रोत्रयोग्यं नभः, नापीन्द्रियान्तरयोग्यं विशेषगुणाभावात् पराश्रितग्रहणं संयुक्तसमवाये निबन्धनं, न गुणत्वं। यथा तव मतेऽन्यत्राप्यदृष्टमप्यञ्जनसंयोगात् द्रव्यग्रहणं तथा मम मते स्वसमवेतग्राहकं भविष्यतीति न किञ्चिदनुपपन्नम्। यदा चैवं गुणत्वं तदा पारतन्त्र्याश्रययोः क्लृप्तत्वान्न कल्प्यत्वम्। शब्दाश्रयेत्वेनाकाशानुमानात्तदनाश्रयत्वं धर्मिग्राहकप्रमाणविरुद्धम्। न च पृथिव्यादिरेवाश्रयोऽस्त्विति वाच्यं तद्गतत्वेनाप्रतिभासात्।

यद्यपि ध्वनति दुन्दुभिरिति प्रतिभासस्तथापि श्रोत्रगतशब्दोपलब्धेर्भ्रान्तिरेवासौ। वायवीयत्वे स्पार्शनं स्यात्। भूतगुणत्वे तद्गुणैः सहोपलभ्येत। शब्दाश्रयपृथिव्यादिभावे प्रमाणं च नास्ति।

न चात्मगुणः अमानसत्वात् अवयव्याश्रयत्वे बहूनां शब्दसमवायहेतुत्वं कल्प्यं। अण्वाश्रयत्वे त्वप्रत्यक्षत्वप्रसङ्गः। तस्माद्व्यतिरिक्ताकाशः सिद्धः। स एव

श्रोत्रं। तच्च स्वसमवेतं शब्दं गृह्णत् स्वरूपं न गृह्णातीति नियमेन स्वातन्त्र्यमुपपद्यते । घ्राणादिगृहीतगन्धादिविशिष्टद्रव्यमिन्द्रियान्तरेण गृह्यत इति तत्र पारतन्त्र्यं युक्तं तथानुमानात्। पारतन्त्र्यपक्षेऽत्रापि समानम्। पारतन्त्र्यं शब्दवानयं देश इति । न च शब्दविशिष्टं नभ इन्द्रियान्तरं गृह्णाति तद्योग्यविशेषगुणयोगसामग्र्यभावात् । न च रसनेन्द्रियस्य द्रव्यग्रहणनियमः, मनसः तदसंभवात् । न चात्मग्राहकं मनः, अजिज्ञासितज्ञानत्वप्रसङ्गात् ।

न चाजिज्ञासितज्ञानत्वे क्षणिकात्मविशेषगुणत्वं निबन्धनं योग्यसन्निकर्षनियमस्य विशिष्टत्वात्। तस्मान्मनसो न द्रव्यग्रहणशक्तिः कल्प्या । नापि रसनेन्द्रियं द्रव्यं गृह्णदेव गुणं गृह्णाति प्रभायां रूपमात्रस्यातपेषु च स्पर्शमात्रस्य ग्रहणात् । तस्मादिन्द्रियान्तरयोग्यविशेषगुणाभावान्नभसो नैकेन्द्रियत्वादपि शब्दस्य स्वातन्त्र्यप्रतीतिरुपपन्ना । तस्माच्छब्दस्य गुणत्वं सिद्धम् ॥

## ॥ शब्दनित्यत्ववादः ॥

शब्दे तत्प्रत्यये स्पष्टे नानाव्यञ्जककल्पनात् ।
उपलब्धिव्यवस्थानमुपपन्नं भविष्यति ॥

ननु शब्दोऽनित्यः कृतकत्वात् घटवत्। कृतकश्च तदनभिव्यङ्ग्यत्वे सति प्रयत्नानन्तरमुपलभ्यमानत्वाद्घटवत्, विभुविशेषगुणत्वात् सुखवत्, महद्विशेषगुणत्वाद्रूपवदित्येवमादिभिः कृतकत्वानुमानादनित्यत्वं सिद्धम्। न च प्रयत्नानभिव्यङ्ग्यत्वमसिद्धं तदभिव्यक्त्यसंभवात्। न तावत्सन्निधापकत्वं प्रयत्नस्य श्रोत्रे नित्यसन्निहितत्वात् शब्दस्य। नापि मूलोदकादिष्विवावरणापनायकत्वं श्रोत्रेण नित्यसम्बन्धस्यावरणाभावात् । नापीन्द्रियोपबृंहकत्वमालोकवत् संभवति अमूर्तस्याकाशात्मनः श्रोत्रस्योपबृंहणाभावात् ।

नाप्यदृष्टरूपाभिव्यक्तिः तत्कल्पने मानाभावात् । किञ्च वर्णाः प्रतिनियताभिव्यञ्जकाभिव्यङ्ग्या न भवन्ति एकेन्द्रियग्राह्यसमानाश्रयत्वात् रूपादिवदिति तदनभिव्यङ्ग्यत्वं सिद्धम् । न च भूतलगतानां दीपपटादीनां चालोकानाञ्च

त्रसरेणूनां च समानसौरालोकानभिव्यङ्ग्यत्वादनैकान्तिकत्वं वाच्यम्। भिन्न-समवायित्वेन समानाश्रयत्वाभावात्तेषाम्। अथ चन्द्रिकायां घटगतारुण्यस्य तत्परिमाणादेश्च समानचन्द्रिकाव्यङ्ग्यत्वं नास्तीत्यनैकान्त्यमिति चेत्; न। चन्द्रिकयानभिव्यङ्ग्यत्वेऽप्यारुण्यस्यासाधारणाभिव्यञ्जकाभावात् नानैकान्त्यम्। नापि रूपगतैकेन्द्रियग्राह्यत्वं प्रयोजकमसाध्यव्यापकत्वात्। वायावयवगतस्पर्शावयव्यादेः साध्यदर्शनात्। तस्मादनभिव्यङ्ग्यत्वादनन्तरक्षणेऽनुपलब्ध्यभावावगतेः शुक्लादिगताकारभेदस्य च प्रत्यक्षत्वात्प्रत्यभिज्ञायाश्च सामान्यविषयतयोपपत्तेः स्थैर्यकल्पनायोगादनित्यः शब्द इति सिद्धम्।

अत्रोच्यते—सोऽयं गकार इति प्रत्यभिज्ञा तावत् समस्ति। न सा जातिनिबन्धना भेदप्रतिभासाभावात्। वक्तृभेदे भेदप्रतिभासस्त्वभिव्यञ्जकध्वनिनिबन्धनः। न चाभेदप्रतिभासः सादृश्याधीनः कल्पनागौरवप्रसङ्गात्। तस्मात् प्रत्यभिज्ञायाः स्थिरत्वावगतेः प्रयत्नस्याभिव्यञ्जकत्वं सिद्धम्। युक्तं परस्परसम्बन्धोद्देशप्रवृत्तेश्च प्रयत्नस्याभिव्यञ्जकत्वमेव। मध्येऽनभिव्यक्तत्वादनुपलब्धियुक्ता। नानाविधध्वनिसंयोगरूपसंस्कारसचिवं श्रोत्रं नानाविधवर्णान् गृह्णातीति युक्तमुपलब्धिव्यवस्थानम्। न च ध्वनीनामभिव्यञ्जकत्वे रूपादिष्विव सर्वोपलब्धिप्रसङ्गः भेदेनाभिव्यक्तौ विरोधाभावात्।

नापि व्याप्तिविरोधः एकेन्द्रियग्राह्याणां युगपदभिव्यक्तावनित्यत्वस्य समवेतत्वस्य वा तुल्यवदावरणापनयस्य वा तुल्यवदिन्द्रियबृंहणस्य वा प्रयोजकत्वात् अनैकान्त्याच्च घटगतादीनामपि स्वदीर्घसादृश्यादीनां प्रतिनियतोपलब्धिदर्शनात्।

न च भिन्नप्रतियोगित्वात् तेषां भिन्नप्रतियोगिज्ञानापेक्षेति वाच्यम् कतकोशीरादिभिर्जलगतरूपस्पर्शाभिव्यक्तिदर्शनात्। तस्मान्नानुमानविरोधः। तस्मात्प्रत्यभिज्ञायाः स्थिरत्वं सिद्धम्। एवं प्रयत्नस्याकारणत्वात्सदकारणत्वेन शब्दस्य नित्यत्वं सिद्धम्। शब्दो नित्यः अपाकजनित्यभूतविशेषगुणत्वात् आप्यपरमाणुरूपवत्, विभुविशेषगुणत्वात् आप्यपरमाणुवत्। विभुविशेषगुणत्वं महद्भूतविशेषगुणत्वं च प्रत्यभिज्ञारूपप्रत्यक्षबाधितं नानित्यत्वसाधकम्। प्रागूर्ध्वमनुपलब्धिरनभिव्यक्त्याप्युपपद्यते। प्रत्यभिज्ञा तु न सामान्यविषयतयोपपद्यते। सामान्यानेकव्यक्तिकल्पनातः स्वरूपैकत्वकल्पनायां उचितत्वात्।

न च दीपप्रत्यभिज्ञायामिवानुमानबाधः संभवति कूलप्तविनाशहेतोरवयवविशरणस्यानन्यथासिद्धस्य तत्र दर्शनात्तथात्वम्। अत्र न तादृशं कारणमस्ति। तस्मात्प्रत्यभिज्ञाबाधाभावात् स्थिरत्वं सिद्धम्। स्थिरत्वे च शब्दस्याभिव्यञ्जकस्य व्यवस्थाकल्पनैवोचिता लाघवात्। किञ्च एकाभिव्यङ्ग्यत्वे रूपादीनां रूपिगतत्वं स्पर्शवद्गतत्वं वा प्रयोजकं न समानेन्द्रियग्राह्यत्वम्। तस्मात्सिद्धं शब्दस्य नित्यत्वम्।

॥ इति नयतत्त्वसङ्ग्रहे शब्दाधिकरणं समाप्तम् ॥

## ॥ अन्विताभिधानवादः ॥

[1]प्राथम्याल्लाघवाच्चैव तात्पर्योपगमादपि[2]।
पदानामन्विते शक्तिः पदार्थानां न गौरवात् ॥

अत्र केचित्—पदानामन्विताभिधानासम्भवं[3] पदार्थानामन्वयावबोधकत्व[4]-सम्भवं चाचक्षते। तत्र तावत्पदैरन्विताभिधानं न संम्भवति शक्तिकल्पनागौरवप्रसङ्गात्। एका तावत्पदार्थविषया शक्तिः कल्प्या। अपरा अन्वयविषया। तृतीया चेतरविषया। अथ पदान्तरप्रतीतेतरोपजीवनेनान्वितमात्रे शक्तिरित्युच्यते; मैवम्। इतरेतराश्रयप्रसङ्गात्। इतरपदस्येतरपदाभिधानापेक्षत्वादभिधानस्य। अथ स्मृतिप्रतीतेतरोपजीवनेनान्विताभिधानमिति चेत्; न। अतिप्रसङ्गात्। बहुषु प्रतीतेषु केनचिदन्वयानुरञ्जकं केनचिन्नेति व्यवस्थाभावात्। व्यवस्थायां गौरवं दुर्वारम्। अथान्वयस्यार्थगृहीतत्वान्नान्यशक्त्यपेक्षेति चेत; न। किमिदमर्थगृहीतत्वम्— जातिप्रतिपत्तिनान्तरीयकव्यक्तिप्रतिपत्तिवदन्वितप्रतिपत्तिनान्तरीयकोऽन्वयः इति चेत्; मैवम्। किमिदं जातिप्रतिपत्तिनान्तरीयकत्वं व्यक्तेः? किं जातेः व्यक्तिबोधकत्वनियमः? किं वा जातिप्रतिपादकस्य व्यक्तिबोधकत्वनियम इति?

न तावदाद्यः—भिन्नप्रतिपत्त्यनङ्गीकारात्। नापि द्वितीयः—शब्दशक्त्युपगमप्रसङ्गात्। अथ रूपस्वभावाद्वा रूपबुद्धिस्वभावाद्वा रूपिबुद्धिसम्भवान्न शब्दशक्तिः कल्प्येति चेत्; न। रूपस्य तद्बुद्धेर्वा स्वभावापरपर्यायशक्तिकल्पनाप्रसङ्गात्। तस्मादन्वयशक्तिरपि कल्प्येति गौरवं तदवस्थमेव।

1. ख. प्राथम्यादभिधातृत्वात्.
2. ख. र्यावगमादपि.
3. क. भिधानसंभवम्
4. क. यावोधकत्वम्

किञ्च पदशक्तिपक्षे पर्यायाणां घटकुम्भकलशादिशब्दानां प्रत्येकं शक्तिकल्पनाप्रसङ्गादतिगौरवं भवति। पदार्थस्यान्वयबोधपक्षे पदार्थस्यैकत्वादेकैव शक्तिः।

ननु पदार्थपक्षेऽपि बहुशक्तिकल्पना दुर्वारा। तथाहि—एका पदानामर्थविषया शक्तिः। अपरा पदार्थानामन्वयविषया। तृतीया च पदानां पदार्थशक्त्याधानशक्तिः कल्प्या पदबोधितानामेवान्वयबोधकत्वाङ्गीकारात्। पर्यायशब्दानामेकत्वेऽपि पदार्थस्य तच्छक्त्याधानशक्तिभेदेनास्थेयेति गौरवं तुल्यमेव।

मैवं—एतावच्छक्तिकल्पनासम्भवात्। प्रथमं तावत्पदानां स्मारकत्वातिरिक्ताभिधायकत्वासंभवान्नाभिधानशक्तिः कल्पनीया। पदार्थानां भेदेनावगतानामपि परस्परान्वयबोधकत्वं दृष्टमतो न तेषामपि शक्तिः कल्पनीया। अत एव पदानां शक्त्याधानशक्तिर्नास्ति। तथाहि श्वेतिमारूपं पश्यतः खुरपुटटङ्काररवं हेषारवं च शृण्वतः श्वेतोऽश्वो धावतीति धीरुपलभ्यते। अथ रूपानुमिते द्रव्य एव खुरपुटरवाद्धेषारवाच्च गमनमश्वत्वं चानुमीयत इत्यानुमानिकोऽयमन्वयप्रत्यय इति न पदार्थसामर्थ्यमस्तीति चेत्; एवं तर्हि मधुरो गुडः, शीतं चन्दनमिति भिन्नेन्द्रियावगतानां द्रव्याणां परस्परान्वयो दृश्यते स चन्दने पदार्थसामर्थ्यात् सम्भवतीति पदार्थसामर्थ्यमाश्रयणीयं। न चैकेन्द्रियज्ञानजनितसंस्कारसहितमिन्द्रियान्तरं गुणान्वयं बुध्यत इति वाच्यम्। यत इन्द्रियस्य भिन्नेन्द्रियग्राह्यसम्बन्धबोधसामर्थ्यं नास्ति। तत्कल्पने च पदार्थानामेव कल्पनीयम्। तथा च सति तिक्ता शर्करेत्ययमपि प्रत्ययो घटते। तस्मात् पदार्थसामर्थ्यमप्यन्वयबोधकमेव द्रष्टव्यम्। अथ संस्कारसहितस्येन्द्रियस्य यथा प्रत्यभिज्ञायां पूर्वापरकालीनवस्तुग्राहकत्वं यथा वा गोसम्बन्धिसादृश्यज्ञानजनकत्वं तथा पूर्वदृष्टगुणतादात्म्यमपि द्रव्यस्य गृह्णाति इन्द्रियमिति न पदार्थशक्तिः पृथगस्तीति चेत्; न। एवमपि शब्दबोधितानां पदार्थानामन्वयबोधकत्वशक्तिरेकैवास्थेयेति लाघवमस्ति।

नन्वेका चेच्छक्तिराश्रीयते तद्वरं प्राथम्यात्पदगतैवाश्रीयतां न जघन्यपदार्थगता; न। अन्तरङ्गत्वात् पदार्थानामेव शक्तिर्युक्ता न व्यवहितपदगता।

तात्पर्यं च परम्परयापि कार्यजनने सम्भवति यथा पाकपराणामपि काष्ठानां ज्वालाशक्तिर्ज्वालायाश्च पाकशक्तिः न तु पुनः प्राथम्यात् करणत्वात्पाकशेषत्वाच्च ज्वालाशक्तिव्यतिरेकेण पाकशक्तिरस्ति ।

एवं पदानां पदार्थस्मारकत्वं तेषां अन्वयबोधकत्वमिति । न चैवं पदार्थशक्तिबोध्यत्वेऽन्वयस्याशाब्दत्वप्रसङ्गः, शब्दद्वारत्वात्पदार्थव्यापारस्य । न चेन्द्रियस्यार्थसंयोगसापेक्षत्वेऽर्थस्याप्रत्यक्षतापत्तिः । एवं चान्तरङ्गत्वादन्यत्रानुपक्षीणत्वाच्च पदार्थानामेवान्वयशक्तिरास्थेया । अथवा तेषामपि न शक्तिकल्पनम् । विशिष्टान्वयपराणां पदानां पदार्थस्वरूपमात्रबोधनेऽनुपपन्नत्वात् तदुपस्थितान्वयलक्षकत्वमुचितम् । एवं न कापि शक्तिः कल्पनीया भवति ।

अत्रोच्यते—पदानामेवान्विते शक्तिः । न च शक्तिकल्पनागौरवमेकैवान्वितविषया शक्तिः नापरा काचिदस्ति अन्वयविशिष्टपदार्थप्रतीतेरेकत्वात् । तत्र न विधिशक्तिवदभिधानशक्तिभेदः । यत्र नियमेन विशिष्टं कार्यं तत्र तत्कार्यनिरूप्यापि शक्तिरेकैव । नियमेन स्वतन्त्रकार्यभेदे शक्तिभेदः । एवं तर्हि नियमेन जातिविशिष्टव्यक्तिप्रतीतेः विशिष्टविषया शक्तिराश्रिता भवेच्छब्दस्य; सत्यम् शब्दस्य विशिष्टशक्तिरस्ति । किन्तु विशेष्यांशे न शब्दप्रयुक्ता । अपि तु जातिबोधकत्वप्रयुक्ता । जातिबोधकानामिन्द्रियादीनां नियमेन व्यक्तिपर्यन्तबोधकत्वदर्शननियमाच्छब्दस्यापि जातिबोधकत्वे कल्पितेऽर्थात् सा शक्तिर्विशिष्टशक्तिरवगता भवति । शब्दप्रयुक्तिविषयत्वात् जातिरभिधेयेत्युच्यते । तस्माद्विशिष्टशक्तिरेकैव । अथ यदुक्तं इतरान्विताभिधानादितरविषयेऽपि शक्तिः कल्पनीयेति; मैवं । स्मृतिसिद्धस्येतरस्यान्वयांशो बोध्यत इति न तत्रापि शक्तिः कल्प्या । सर्वत्रेयं स्थितिः—सर्वं हि प्रमाणं संस्कारसहितं पूर्वं स्मृत्या वा प्रमाणेन वावगते विशेषणे तद्विशिष्टरूपं बोधयति । यद्यपि विशेषणांशे, शक्तिर्नास्ति तथापि संस्कारसहितं विशिष्टं बोधयति यथा गोसदृशो गवयः, मधुरा शर्करा, शीतलं चन्दनं सुगन्धि च, सैवेयं गौर्देवदत्तोऽयमित्यादि; तथेहापि स्मृतिस्थप्रतियोगिनि तदन्वयो बोध्यत इति न प्रतियोगिन्यपि शक्तिः । अथवा विमर्शारूढेऽन्वयेऽन्वितांशो बोध्यत इति नान्वयेऽपि शब्दस्य शक्तिः कल्प्या । यथाख्यातानां कर्तृसंख्यावाचित्वे कर्तर्यपि न शक्तिः । नान्यलभ्ये नागृहीतन्यायावतारः ।

किञ्च परमतेऽपि पदार्थोऽन्वयं बोधयन्नात्मनि परस्मिंश्च शक्तिमपेक्षते तस्मात्पदवादिनामेव शक्तिरिति स्थितम्। परेषां कल्पनागौरवं वक्ष्यते। यदुक्तं पर्यायाणां बह्व्यः शक्तयः कल्प्या इति ; तन्न। एकस्याः शक्तेः बह्वाश्रितायाः कल्प्यत्वात्। पदार्थमतेऽपि बहुभिः शब्दैर्बोधितस्य बोधकत्वात् बह्वाश्रितत्वं दुर्वारम्। किञ्च पदार्थवादिमते पदगतैका शक्तिः पदार्थानामन्वय-बोधिका परा, तदाधानशक्तिः पदगताऽपरा, इति बहुकल्पनं स्यात्।

अथ स्मारकत्वमेव पदानां नान्या शक्तिरस्ति इति चेत्; न। प्रतीतेर्लक्षणा सम्भवति। तस्मात्पदशक्तिराश्रयणीया।

ननु विशिष्टान्वयतात्पर्यस्य पदगतस्य प्रतीतस्यान्यथानुपपत्त्या विशिष्टा-न्वयप्रतीतिरुपपन्नेति चेत् ; हन्त तर्हि वाक्यार्थप्रतीतिः अर्थापत्तिः स्यात्, न प्रमाणान्तरं भवेत्। न च प्रमितिशक्त्यभावे तात्पर्यमात्रात्प्रमाणान्तरं भवति तस्माच्छब्दं प्रमाणान्तरमभ्युपगच्छता कस्यचित्प्रमितिशक्तिरवश्याश्रयणीया। सा च पदानामेव न पदार्थानामित्युक्तमेव। अतस्सिद्धं पदशक्तिनिमित्ता वाक्यार्थ-प्रतीतिरिति।

**॥ इति नयतत्त्वसङ्ग्रहे तद्भूताधिकरणं समाप्तम् ॥**

## ॥ वेदापौरुषेयत्ववादः ॥

अभिप्रेतपरं वाक्यं पौरुषेयं प्रचक्षते।
पुरुषो वेदवाक्यार्थं नान्यतो बोद्धुमर्हति ॥

वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् भारतादिवाक्यवत्। न च वर्णानां लोके वेदे च नित्यत्वात्तत्पौरुषेयत्वासम्भवः। क्रमस्य तु सर्वत्र पुरुषाधीनत्वात् तत्साध्यत्वेऽपि सिद्धसाध्यतेति वाच्यम्। यादृशं भारतादिषु पौरुषेयत्वं तादृशमत्र साध्यते। तच्च साक्षाद्वा परम्परया[वा] स्वतन्त्रपुरुषपूर्वकत्वं। न चापूर्वक्रमजातित्वं पौरुषेयत्वमिति वाच्यम्। जातेरपूर्वत्वासम्भवात्। नित्यत्वे च निराश्रयत्वासम्भवाच्च। न चाम्रफलजातेरिवानासन्नकाले निराश्रयत्वं सम्भव-तीति वाच्यम्। क्वचित्सर्वदा विद्यमानत्वादाम्रफलस्य।

ननु स्वतन्त्रपुरुषपूर्वकत्वस्य साक्षात्त्वे पारम्पर्ये वा साध्ये बो[बा]धित-विषयत्वमनैकान्तिकत्वं च प्रसज्यत इति चेत् ; मैवम्। तत्पूर्वकत्वमात्रस्य

साध्यत्वात् । अथाभिप्रेतार्थतात्पर्यं वाक्यानां पौरुषेयत्वं न वेदवाक्येषु साध्यत इति न दोषः ।

अथ वेदवाक्यार्थस्य प्रमाणान्तरागोचरत्वेनाशक्यज्ञानत्वाच्छक्यज्ञान-प्रयुक्तत्वाच्च पौरुषेय[त्वस्य] वाक्यत्वमप्रयोजकमिति चेत् । मैवम् । अत्रापि कस्यचिच्छक्यज्ञानत्वेन साधनव्यापकत्वात् यद्यशक्यज्ञानत्वाद्वेदार्थस्य पौरुषेयत्वं भवेत्, तर्हि चैत्यवन्दनवाक्यस्यापि प्रमाणान्तरागोचरार्थत्वेन पौरुषेयत्वं भवेत् । अथ तत्र कर्तृस्मृतेः पुरुषबुद्धियोग्यविनियोगार्थत्वान्न प्रमाणान्तरार्थत्वमिति चेत्; न। अत्रापि कर्तृस्मरणस्याविशिष्टत्वेन तथात्वप्रसङ्गात् । न च स्मर्यमाणकर्तृकं पौरुषेयं भवतीति नियमोऽस्ति। न च वेदानां रचयितुः दृष्टानुसारेण शरीरिकर्तृत्वप्रसङ्गाच्छरीरस्य च योन्यादि[1]जन्यत्वव्याप्तेरादिकर्तुः तदसम्भवात् विशेषविरोध इति वाच्यम् । शरीरस्य योनिजत्वनियमाभावात् धृष्टद्युम्नादेर्योगिनां च स्वर्गिणां चायोनिजदेहोपादानस्मरणात् । किञ्च परिदृश्यमानमनुष्यादिदेहानां योनिजत्वदर्शनात् ततो विलक्षणयोगीश्वराणामयोनिजदेहत्वेऽपि न विरोधः ।

ननु सर्वेषां स्मर्तव्यत्वे सत्यस्मरणात् कर्तुरभावो निश्चीयत इति चेत्; न। स्मर्तव्यत्वनियमाभावात् । यस्य मानान्तरेणाप्तिरवधृता तस्य कर्तुः स्मरणं प्रामाण्योपयोगि । यस्य कतिपयवाक्येषु दृष्टार्थेष्वन्वयव्यतिरेकाभ्यां सत्यत्वमवगम्य तत्कर्तुराप्तिमवधार्यादृष्टार्थेष्वपि तत्प्रणीतत्वात्सत्यत्वमवधार्यते तत्कर्तुः स्मरणं नातीवोपयुज्यत इति युक्तं केषांचिदस्मरणं । तस्मात्सिद्धं वेदवाक्यस्य पौरुषेयत्वमिति । अत्रोच्यते—न वाक्यत्वं पौरुषेयत्वं साधयति मानान्तरयोग्यार्थत्वं पौरुषेयत्वे प्रयोजकं न वाक्यत्वं । तस्यापौरुषेयत्वेऽपि न विरोधः । पुरुषस्तु नानवगतविषयं वाक्यं रचयितुं प्रभवतीति युक्तं प्रागुक्तस्योपाधित्वं । न च साधनव्यापकत्वं वेदादृते वेदत्वेद्यज्ञानासम्भवात । न च विधिस्पृष्टदेवतात्वस्य मन्त्रप्रकाशनियमादृष्टस्य चाधीतस्वाध्यायजन्यनियमादृष्टादेश्च वेदादृते ज्ञानं सम्भवति। बुद्धवाक्यन्तु पौरुषेयत्वेनाङ्गीकृतत्वात् । पुरुषस्य यत्रावगतशक्तिस्तद्विषयत्वात्तद्योग्यविनियोगाध्यासमूलमिति निश्चीयते । न च पुरुषातिशयकल्पना प्रमाणवती न च स्वातिशये स्ववचनं प्रमाणं तद्वचनेषु कस्यचित्सत्यत्वमन्यथासिद्धं

---

1. क. जन्यत्वे व्याप्तेः

परस्परविरुद्धवचनाच्च नरातिशयकल्पना नावकल्पते। तस्मात् बुद्धादिवचसां विनियोगाध्यासमूलत्वं वेदानां सर्वत्राविगीतस्वरूपाणां कार्यार्थानां पुरुषाशक्यतया तदनुप्रवेशो नास्ति कारकादिसमाख्यातुः प्रवचनादप्युपपद्यते। तस्मात्कर्तुः स्मृत्यभावात् यथाश्रुतिकार्यार्थतया पुरुषागोचरत्वेन वेदानामपौरुषेयत्वं सिद्धम्।

प्रयोगश्चात्र भवति—वेदा न पौरुषेयाः मानान्तरायोग्यार्थत्वात् न यदुक्तसाध्यं न तदुक्तसाधनं यथा भारतादि। यावतीभ्यः इनपरिवृत्तिभ्यः पूर्वक्षणो जगदादिरित्युच्यते स कालो वेदाध्ययनशून्यो न भवति कालत्वादधुनातनकालवत्। तस्माद्वेदवाक्यान्यपौरुषेयाणीति सिद्धम्।

**॥ इति नयतत्त्वसङ्ग्रहे भट्टविष्णुविरचिते वेदाधिकरणं समाप्तम् ॥**

बाधार्होऽयं प्रपञ्चस्तु दृश्यत्वाच्छुक्तिरूप्यवत्।
नास्ति प्रत्यक्षबाधोऽस्य प्रत्यक्षागोचरत्वतः॥

प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरजतवत्, नायं हेतुस्स्वरूपासिद्धः निश्चितपक्षवृत्तित्वात्। नाप्याश्रयासिद्धः प्रपञ्चस्य प्रतीतिसिद्धत्वात्। न च शशशृङ्गवदत्यन्तासिद्धः प्रपञ्चः तस्य प्रतीतिसिद्धत्वात् अर्थक्रियाकारित्वाच्च। न च भ्रान्तिज्ञानसिद्धस्य हेतुत्वमाश्रयत्वं वा न संभवत्यध्यारोपितधूमस्येवेति वाच्यम्। व्याप्तिबलेनाध्यारोपितस्य क्वचिद्धेतुत्वसम्भवात्, स्वप्नेऽहिदंशाङ्गनापरिष्वङ्गादेः प्रायेणानन्दादिहेतुत्वदर्शनात्।

न च तत्र ज्ञानस्यैव हेतुत्वं अहिदंशाद्यविशेषितज्ञाने तथा दर्शनात्। एतेन बाधार्हस्याप्यबाध्यार्थक्रियाकारित्वं समर्थितं। ईदृशं च सत्वं प्रपञ्चस्यापि तत्सम्भवात्। नाप्यनैकान्तिको हेतुः पक्षत्रयवृत्त्यभावात्। न चात्मनानैकान्तिकत्वं तस्य स्वप्रकाशत्वेन दृश्यत्वाभावात्। नापि मिथ्यात्वेन तस्यापि साध्यसंभवात्। न च मिथ्यात्वस्य मिथ्यात्वे प्रकृतस्य सत्यत्वापत्तिः प्रपञ्चाबाधेन मिथ्यात्वमात्रस्य बाधाभावात्। सविलासाविद्यानिवृत्तिसमये प्रपञ्चवन्मिथ्यात्वस्यापि निवृत्तिसम्भवात्।

नाप्यविद्यानिवृत्त्यानैकान्तिकत्वं अविद्यानिवृत्तेरविद्याप्रतियोगिकात्मस्वरूपत्वात्। दृश्यत्वाभावात्स्वरूपव्यतिरेकपक्षेऽविद्यानिवृत्तेरपि बाध्यत्वमस्तु, न

